# MADHAVACHAMPU

# A POEM

BY

CHIRANJIB BHATTACHARYA.

EDTED BY

JIBANANDA VIDYASAGARA B. A.




Calcutta:

PRINTED AT THE KAVYAPRAKASHA PRESS.

1872.

*be had Pandit Jibananda Vidyasagara B. A. Govt. Sanskrit of Calcutta.*

पण्डितकुलतिलक-पूज्यपाद श्रीमत् तर्कवाचस्पति पाद-प्रणीत-प्रकाशित-पुस्तकान्येतानि

| | | | |
|---|---|---|---|
| १ | आशुबोध व्याकरणम् | ... | ३। |
| २ | धातुरूपादर्शः | ... | २ |
| ३ | शब्दस्तोम-महानिधि [संस्कृत अभिधान] | | १० |
| ४ | सिद्धान्तकौमुदी—सरलाटीकासहिता | ... | ११ |
| ५ | सिद्धान्तबिन्दुसार [वेदान्त] | ... | ॥ |
| ६ | तुलादानादिपद्धति [वङ्गाक्षरैः] | ... | ४ |
| ७ | गयाश्राद्धादिपद्धति | ... | १ |
| ८ | शब्दार्थ रत्न | ... | ॥। |
| ९ | वाक्यमञ्जरी [वङ्गाक्षरैः] | ... | । |
| १० | छन्दोमञ्जरी तथा वृत्तरत्नाकर—सटीक | | ॥= |
| ११ | वेणीसंहार नाटक—सटीक | ... | १ |
| १२ | मुद्राराक्षस नाटक—सटीक | ... | १॥ |
| १३ | रत्नावली | ... | ॥। |
| १४ | मालविकाग्निमित्र—सटीक | ... | १॥ |
| १५ | धनञ्जय विजय—सटीक | ... | । |
| १६ | महावीरचरित | ... | १॥ |
| १७ | साङ्ख्यतत्त्वकौमुदी—सटीक | ... | २ |
| १८ | वैयाकरणभूषणसार | ... | ॥। |
| १९ | लीलावती | ... | ॥। |
| २० | वीजगणित | ... | १ |
| २१ | शिशुपालवध—सटीक | ... | ६ |
| २२ | किरातार्जुनीय—सटीक | ... | २॥ |
| २३ | कुमारसम्भव—पूर्वखण्ड सटीक | ... | १ |
| २४ | कुमारसम्भव—उत्तरखण्ड | ... | ॥ |
| २५ | अष्टकम् पाणिनीयम् | ... | ॥। |
| २६ | वाचस्पत्यम् [संस्कृत वृहदभिधान] | ... | ६० |

collated

# माधवचम्पू

गद्यपद्योभयात्मकं काव्यम् ।

महामहोपाध्याय-श्रीचिरञ्जीवकविना

विरचितम् ।

वि-ए-उपाधिधारिणा

श्रीजीवानन्द-विद्यासागर-भट्टाचार्य्येण

संस्कृतम् ।

कलिकाताराजधान्याम्

काव्यप्रकाशयन्त्रे

मुद्रितम् ।

शकाब्दाः १७९३ । इं १८७२ ।

# माधवचम्पूकाव्यम् ।

## प्रथमोच्छ्वासः ।

तमोगणविनाशिनी सकलकालमुद्योतिनी
धरातलविहारिणी जडसमाजविद्वेषिणी ।
कलानिधिसहायिनी लसदलोलसौदामिनी
मदन्तरवलम्बिनी भवतु कापि कादम्बिनी ॥ १ ॥
विमोहतमसः क्षयान्मुनिमनः प्रकाशं मय-
द्दयार्द्रमधिकोन्नतं भुवनदाहकारि क्षये ।
अये ! विलसतु क्षणक्षणविलक्षणं तत् सदा
सदाशिवमयं महत् किमपि धाम मच्चेतसि ॥ २ ॥
एतत्काव्यकृते कृथोदितमहादुर्वासना राक्षसी
हस्ते निःपतितः सहायमभितः पश्यामि नैव क्वचित् ।
तस्मात्त्वच्चरणौ तवैव शरणौ मत्वा मुहुः प्रार्थये
वाचामीश्वरि ! काचिदद्य करुणा त्वच्चित्तमालम्बताम् ॥३॥

पापौघध्वान्तविध्वंसनपटुचरितोत्कीर्त्तनं यस्य पुंसः
सोऽत्र ब्रह्माण्डभाण्डप्रकटितविभवो माधवो वर्णनीयः ।
तस्मादस्मिन् प्रबन्धे प्रतिपदविशदे प्राकृताद्यैरवद्ये-
ऽप्यावद्धे कोमलोक्त्या निवसतु सुहृदां चित्तवृत्तिः कदाचित् ॥४॥

अस्ति तावत् सुरपुरमिव विबुधवृतं रसातलमिव भोगिकुलाकुलं कुमुदकाननमिव द्विजराजप्रकाशितं पयोधिसलिलमिव कलानिधिसमुल्लासितं सुमेरुशिखरमिव काञ्चनरत्नपूरपरिपूरितं कैलासशिखरमिव सदाशिवसहितं मधुपुरमिति भुवि विदितं तस्मिन् त्रिभुवनविनिवासिनां मानसैकनिकेतनः कालिन्दीकूलवनालीतमालकन्दलः सकलगोपसीमन्तिनीचित्तचातकनवीननीरदः श्रीमान् माधवो जयति स्म । स कदाचित् पुरा मृगयारसकुलकलितान्तःकरणः ।

दधद्रुचिरमम्बरप्रतिममम्बरं सर्व्वतः
स्वबाहुतटलम्बितं हरिधनुः समानं धनुः ।
सुरेन्द्रमणिमण्डितं न च पयोदनीलद्युतिं
सुमन्दधुतकेशरं तुरगराजमारोहति ॥ ५ ॥

पदक्रमविधौ क्रमोन्नमितकन्धरः प्रोद्धतः
पुरः खुरयुगेन तु स्पृशति वा न वा मेदिनीम् ।
विलोचनपथं गतो व्रजति वा न वासौ मुहुः
कुरङ्गजयकृत्प्लवङ्गमविधौ तुरङ्गोत्तमः ॥ ६ ॥

अहो !

समूलमुपघातनं ननु तमः कृतूसनसया-

हृदयतलविहारिणि प्रतिदिनं हरौ कुर्वति।
भयाकुलितचेतनैः सह पुनर्निजैर्बान्धवै-
स्तमोभिरपरो हरिः किमयमादरादाश्रितः॥ ७॥

इति नागराणां वचनामृतैरामोदितस्तन्नयनमधुपैर्निपीयमानः क्रमेण काननमनुप्रविष्टः। तदनु तत्रैव कुवलयाचनामा कश्चिन्मितंभूतः कथयति स्म प्रभो!

इतो महिषसंहतिः पुरत एति पञ्चाननो
नदन्ति समरोत्सुकाः परित एव मत्तद्विपाः।
ततो गरुडसङ्करप्रचुरसाहसाः पन्नगाः
कथं वनपरम्परात्रिषमतेयमालोक्यते॥ ८॥

इतोऽपि तावत् कौतुकं कौतुकम्।

मिथो रदनयोजनं तदनुकुम्भसङ्घट्टनं
परस्परकरग्रहैरपि परस्पराकर्षणम्।
विहाय तदनुक्रमं रदनकुम्भशुण्डादिभिः
चणं तुमुलसङ्गरो द्विरदराजयुद्धोत्सवे॥ ९॥

अमुं रदनभेदनात् किमथ कुम्भसङ्घट्टना-
दथापि करताडनात् चयमहं नयामि चणात्।
इतीव परिचिन्तयन् विरमति चणं सङ्गरात्
परस्परमधोमुखः कपितमत्तदन्तावलः॥ १०॥

अहो! पश्य पश्य।

आकुञ्चितान्यथ पदानि निधाय भूमा-
वाकुञ्चितेन च करेण कलेवरेण।

अन्योन्यकुम्भपरिघट्टनबुद्धसारौ
दन्तावलौ समबलौ स्थिरतामुपेतौ ॥ ११ ॥

इतस्तावद्वामे ।

न पश्यति तरङ्गिणीं न च गिरिं न खातोदरं
न भालयति वा क्वचिन्मृगपतिं पुरस्तादयम् ।
मुहुर्मनसि चिन्तयन्निजविपक्षचेष्टामहो
पलायनपरः करी विकलधीः परं धावति ॥ १२ ॥

प्रभो ! इतोऽपि तावत् कौतुकं कौतुकम् ।

मुष्यन्तर्विनिविष्टयष्टिभिरमी ऋक्षा न वीक्षासदाः
सनन्दा द्रुतमूर्द्धमुद्धृतकरा युद्धाय बद्धादराः ।
उद्ग्रीवं स्खलदश्रुबिन्दुविललज्जिह्वं कृतोत्पुच्छकं
विस्तीर्णास्यमुपागतास्तत इतः कुर्व्वन्ति विश्वीरवम् ॥ १३

किञ्च एत एव परस्परम् ।

चिरप्रहारैः परिनष्टयष्टयो
दंशन्ति दन्तैः प्रहरन्ति मुष्टिभिः ।
विदारयन्ति प्रखरैर्नखैरथ
क्षिपन्ति नेत्राणि मनांसि भूगताः ॥ १४ ॥

माधवः सविस्मयं निगदति स्म सखे ! इतस्तावत् पश्य पश्य ।

उन्मत्तद्विरदावली तत इतो धावत्यतिव्याकुला
लीयन्तेऽपि च कातरा वनचराः कुञ्जोदरे शूकराः ।
ऋक्षा यान्ति तरून् पतन्ति महिषाः पङ्कान्तरे सत्वराः

प्रायः कुत्रचिदत्र सञ्चरति भोः पञ्चाननः कानने ॥ १५ ॥

अपवार्य्य वनदेवतावचः सावधानः शृणोति स्म। तथा हि—

शुण्डादण्डविधूननं श्रवणयोरास्फालनं सर्व्वतो
दन्ताघातविधिं धराधरतटे घोरस्फुरद्गर्जनम्।
मातङ्गाधिप मुञ्च मुञ्च सहसा यस्मादिदानीमिह
त्वद्यूथेन्द्रसहस्रदारणपटुः सिंहः समुज्जृम्भते ॥ १६ ॥

अपि च।

रे! रे! काननवासिनः करटिनस्तूर्णं दिशामन्तरे
तावद्गच्छत गच्छत प्रकटतां नो यात यावत् पुनः।
निर्घोषं ननु मत्तवारणधिया धाराधरीयं यतः
श्रुत्वैव द्रुतमुत्थितो धुतसटः पञ्चाननः कोपनः ॥ १७ ॥

तदनु कुवलयाक्षः कथयति स्म। प्रभो! इतस्तावत्।

मदोन्मत्तमातङ्गमालोक्य साक्षात्
प्रियाप्रेमतोऽन्यत्र गन्तुं न शक्तः।
चलत्केशरालि स्फुरत् पुच्छमुच्चै-
र्दरीनर्त्ति सिंहो दरीमध्यवर्त्ती ॥ १८ ॥

अहो!

निपत्य शिखरादधो गगनयातपुच्छोदय-
स्तदुच्छरितशोणितैरधिकशोणनेत्राञ्चलः।
विकासितमुखो रुषा धुतसटो नखैरुन्नतै-
र्विदारयति केशरी द्विरदराजकुम्भस्थलीम् ॥ १९ ॥

किञ्च।

स्वयं क्षिपति लोचने तरलकातरे सर्व्वतः
क्षणेन कृशतातनुं तदनु नूनमालम्बते ।
मदाम्बु परिशुष्यति स्खलति सर्व्वगर्व्वः क्षणात्
कथं करिपतेर्दशा मृगपतौ परिक्रामति ॥ २० ॥

तदनु श्रीमन्माधवः कथयति स्म । सखे ! पुरस्तावत् पश्य पश्य ।

परस्परपराधीनचित्तवृत्तिः सशावकम् ।
सानन्दहरिणद्वन्द्वमानन्दयति मानसम् ॥ २१ ॥
इत उच्चकुमुद्ग्रीवं श्रेणीभूय सशङ्किताः ।
कृष्णसाराः पुरस्तावत् क्षिपन्ति नयनान्यमी ॥ २२ ॥

इतोऽपि तावत् ।

मुहुस्त्रस्यन्तो गृह्णन्तो दशनैस्तृणगुच्छकम् ।
उत्पतन्तः पतन्तश्च खेलन्ति मृगशावकाः ॥ २३ ॥

भवतु तावदन्यतोऽपि कौतूहलमालोकयाव इत्यग्रतः प्रचलति स्म । तदनु कश्चिच्छाखामृगानालोक्य कुवलयाक्षः सस्मितमवदत् । इतस्तावत् प्रभुः क्षणं नयने प्रक्षिपतु । माधवः सादरमालोक्य सस्मितं निगदति स्म । सखे ! आलोकितस्तावदयं शाखामृगसमूहः ।

द्विजिह्वयतिरप्यलं नयनभङ्गिमावर्णने
मनो जगति कस्य वा मुखनिरीक्षणे हृष्यति ।
न भालयतुमीश्वरः शतविलोचनैश्चेष्टितं
व्यनक्ति करकौशलं तदयमेव धातुः परम् ॥ २४ ॥

किञ्च।

वीक्ष्य मानवमुपागतमत्र वानरी किचिकिचीरवजालैः।
स्वाङ्करचितसुता चपलाक्षिक्षेपणेन रटति प्रतिशाखम्॥२५॥

अथच।

परस्परशरीरेभ्यो यूकानादाय सादरम्।
सत्वरं चर्व्वयन्नेव सर्व्वतः क्षिपतीक्षणे॥ २६॥

इति सर्व्वे हसन्ति स्म। अत्रान्तरे कुवलयाक्षः साश्चर्य्यं बद्धाञ्जलिः पृच्छति स्म प्रभो! कथमेभिरेव सहायैः पुरा श्रीमता रघुनन्दनेन निहतो राक्षसभटो दशग्रीवः। श्रीमान् माधव उत्तरयति स्म। सखे! नायमेषां प्रभावः अपि तु तस्यैवानिर्वचनीयमहिम्नो रघुवंशवीरस्य। तथा हि पश्य।

शापानुग्रहसामर्थ्यं यन्मन्त्रविदान्तु यत्।
स हि प्रभावो नैतेषां किन्तु तद्यन्त्रमन्त्रयोः॥ २७॥

आस्तां तावदिदमितः प्रक्रान्तमनुसरामः। इति मृगयामारभते स्म। ततस्तत्रैवाशोकतरुसमासीनकिन्नराभ्यां कौतूहलमालोक्यते स्म। तत्र सुभाषितनामा एकः सुचरितनामानं मित्रं प्रति कथितवान्। सखे! पश्य पश्य।

सभयं हरिणद्वन्द्वं परस्परनिरीक्षितम्।
चक्षुःस्पृष्टमहीपृष्ठं भुवि धावति धावति॥ २८॥

अहो! हत एव तावदयमनेन।

क्षुधा कवलिते पादे तृणं कवलितं त्यजन्।
कातरेक्ष दृगन्तेन ग्रीवाभङ्ग्यावलोकते॥ २९॥

श्चा: स्त्रीणां स्नेहः। तथा हि—

ईषद्व्यसनसम्पन्ने मृगे निपतिते भुवि ।
तं पिबन्ती दृगन्तेन चित्रितेव मृगी स्थिता ॥ २० ॥

इतस्तावदत्यन्तमाश्चर्य्यमाश्चर्य्यम् । कथमपरः श्वा ।

विदारितोऽपि दन्ताभ्यां शतशः क्षतजाप्लुतः ।
वीरधीरो अहात्येव नैव कोलकलेवरम् ॥ २१ ॥

अहो! किमेतदितोऽप्यधिकमिदमद्भुतम् । तथा हि—

ईषद्व्यसनमापन्नः शार्दूलकरवाहनैः ।
नार्था गृहीत्वा तस्यैव प्राणांस्तदपि मुञ्चति ॥ २२ ॥

तदनु सुचरितो निगदति स्म । सखे! पश्य पश्य इतस्तावत्

आकृत्या नवनीरदद्युतिजुषा विद्युत्प्रभैरायुधै-
रश्वेनापि तमोनिभेन मृगयासत्पाहभाजो हरेः ।
आयान्त्येव पुरः पुरः परिकरैर्निश्शङ्किनो जन्तवः
श्रुत्वैवाथ पुरस्तुरङ्गनिनदं धावन्त्यमी विक्लवाः ॥ २३ ॥

किञ्च ।

तमालतरुवत्तनुर्वसनमस्य पत्राकृति
स्फुरत्यथ तुरङ्गमः सदृश एव तच्छायया ।
दिवाकरकरोत्करैरधिकयाततापोदयाः
मृगालिरतिकातरा कथय केन नायास्यति ॥ २४ ॥

ततः सुभाषितः सखे! सत्यमेवैतत् इत्युदीर्य्य सचकित-
माह । सखे! इतस्तावत् पश्य पश्य पुरतो हरेः ।

ईषत्कण्टकितप्रकम्पितलसल्लोमावलीमण्डितो

दन्ताभ्यामवनीं स्पृशन्ननु दिशं व्याघूर्णयन् लोचने ।
सर्व्वा एव दिशोऽतिघुर्घुररवैरापूरयन्सूकरः
क्रोधोद्दामनिकामभीषणतनुर्निःशङ्कमभ्यागतः ॥ २५ ॥

अहो ! मुक्तशरे माधवे सति

निमग्नमभितः शरङ्कमपि पुङ्खशेषं दधत्
पतन्नयनवारिभिः कलित एष कोलो द्रुतम् ।
विशत्यपि वने वने भवति च स्थिरो न क्वचित्
स्खलत्यपि पदे पदे सकलदिक्षु धावत्यपि ॥ २६ ॥

अहो ! आश्चर्य्यमाश्चर्य्यं पश्य कुवलयाक्षानुनयेन श्रीमान् माधवः ।

तन्मूर्ध्नि शृङ्गमिव पत्त्रियुगं निवेश्य
कान्तारवारिहरिणीर्हरिणान् विधाय ।
अर्द्धेन्दुसन्निभशिलीमुखकृत्तशृङ्गान्
कौतूहलेन हरिणान् हरिणीश्चकार ॥ २७ ॥

किञ्च ।

मृगद्वन्द्वमितोऽप्येकं बाणविद्धकलेवरम् ।
आजीवनमनुप्राप नान्योन्यविरहव्यथाम् ॥ २८ ॥

कृष्णसारा लघुच्छिन्नशरभिन्नकलेवराः ।
पातयन्ति प्रियावक्त्रे दृष्टिवृष्टीः सुकातराः ॥ ४९ ॥

अहो ! कथमयमीश्वरः ।

हरिणीनयने वीक्ष्य प्रियानयनयोः स्मृतेः ।
आकर्णाकृष्टविशिखश्चित्रार्पित इवाभवत् ॥ ४० ॥

ततो माधवे किञ्चिदग्रेऽपि चलनीयमित्युदीर्य्य प्रचलिते सुचरितः। सखे! भवतु तावत् आवाभ्यामपि इतोऽग्रे कौतूहलमालोकनीयमित्युदीर्य्य ततोऽग्रे वटविटपिनि समासीनः कथयति स्म सखे! इतस्तावन्महामहिषः।

तारकारविलोचने प्रतिदिशासद्ग्रीवमाघूर्णयन्
गर्जन् वारिदवन्मुहुर्मरुदिव प्रोद्दाममायात्यसौ।

इतस्तावत् सहजवैरी वीरस्तुरङ्गः।

संक्षोभं धरणीं पुरः खुरपुटाघातैर्नयन्नुद्धतो
ह्रेषारावमुरीकरोति सहसा युद्धाय बद्धादरः॥ ४१॥

अहो! आश्चर्य्यमाश्चर्य्यम्।

बाणेन येन निहतो भाले महिषसत्तमः।
पश्य देवस्य माहात्म्यं तेनैवास्य हयो हतः॥ ४२॥

पश्य इतस्तावत् कौतुकं कौतुकम्। तथा हि—

उत्प्लुत्य यावदयमेति गिरेर्दरीतो
व्याघ्रो विधाय गगनाग्रविलम्बिपुच्छम्।
नाराचभिन्नतनुमस्य तरोः स तावत्
शाखाविलम्बितममुं तरसा चकार॥ ४३॥

अथ निवृत्तमृगयारसः श्रीमान्माधवः कथयति स्म सखे कुवलयाक्ष! पश्य इतस्तावत्।

जड़तनुरतिमोदमागतोऽसौ
कथमपि काननमद्य मन्दमन्दम्।
अनुसरति पुरः करी करेणुं

निहतकरो विगताङ्गचेष्टमस्याम् ॥ ४४ ॥

किञ्चायम् ।

दृतहृदयसमुत्थकोपदावा-
नलबहलज्वलदङ्गमाश्रितोऽपि ।
अपरकरिणमागतं करिण्यां
कथमपि वारयितुं प्रभुर्नयातः ॥ ४५ ॥

भवतु तावदिती मगनमहं गाहयन्ते बहुधा तत्र सरो भविता-तावत् तत्रैव चणं विश्रामं करोमीति निष्क्रम्य पुरःसरोऽवलोक्य कथयति स्म ।

निवासो हंसानाममलकमलानामिह घटा
मनो रे हंसानामपहरति का नाम कुकथा ।
परिम्लानामोदं हरति नयनानामनुदिशं
कृतस्थाना नानासुभगकुमुदानामथ ततौ ॥ ४६ ॥

इत्येवं बहु निरूपयन् कौतूहलमालोकयन् स्थितोऽभूत् ।

द्वैताद्वैतमतादिनिर्णयविधिप्रोद्बुद्धबुद्धिश्रुतो
भट्टाचार्य्यशतावधान इति यो गौडोद्भवोऽभूत् कविः ।
बाल्ये कौतुकिना तदात्मजचिरञ्जीवेन या निर्मिता
चम्पूर्माधववर्णिकात्र समभूदाद्योऽयमुच्छ्वासकः ॥ १ ॥

इति श्रीचिरञ्जीव-भट्टाचार्य्यकृत-माधवचम्पूप्रथमोच्छ्वासः ।

---

# द्वितीयोच्छ्वासः ।

अत्रान्तरे स्नानाय तस्मिन्नेव सरसि कलावतीमायान्तीं वीक्ष्य श्रीमन्माधवः कथयति स्म । सखे !

नेयं विद्युद्भुवमधिगता काञ्चनी नापि वल्ली
मन्दं मन्दं प्रचलति यतो नापि वा पन्नगस्य ।
चूड़ारत्नस्फुरदुरुशिखा क्वापि धत्ते सरोजं
का वा तर्हि प्रकृतिसुभगा तत् सखे ! न प्रतीमः ॥ १ ॥

कुवलयाक्षः क्षणं निरूप्य प्रभो !

वक्रोपान्तं नयनयुगलं सर्व्वतो निःक्षिपन्ती
श्रोणीभाराच्छिथिलशिथिलन्यस्तपादारविन्दा ।
आरादालीकरकिशलये दत्तहस्तावलम्बा
काचित् कान्त्या विकसितमहीचक्रमायाति तन्वी ॥ २ ॥

माधवः सत्यं सत्यम् । तथा हि—

किञ्चित् किञ्चिदुदञ्चितेक्षणयुगप्रक्षेपकौतूहलै-
रेतस्याः पथि मन्दमन्दचरणन्यासैकलीलाविधौ ।
मन्दान्दोलितपल्लवैर्मुखविधोः पीयूषबिन्दूपमं
स्वेदाम्बुप्रकरं पुरः सहचरी दूरीकरोति स्फुटम् ॥ ३ ॥

अत्रान्तरे कलावत्याः सखीगणः साकूतस्मितमन्योन्यं कथयति स्म । तथा हि—

किञ्चित् किञ्चित् स्मितविकसितेनाननाम्भोरुहेण
स्वैरं स्वैरं सहचरि पुरो माद्दशीचित्तचौरः।
मन्दं मन्दं कमलममलं भ्रामयञ्छाखिमूले
कोऽयं धन्यो नवजलधरश्यामलः सन्निषस्रः॥ ४॥

कुवलयाक्षः प्रभो!
आलीनां पुरतः कुतूहलवशात् कर्णान्तकण्डूमिषा-
दङ्गुल्यादरचालितस्य सहसा चेलाञ्चलस्यान्तरे।
एतस्याः क्षणमीक्षणाद्वयमिदं त्वां वीक्षितुं सर्व्वतः
खेलन्मञ्जुलखञ्जरीटयुगलस्पर्द्धि स्फुटं लक्ष्यते॥ ५॥

तदनु माधवः सत्यं सत्यम्। तथा हि—
आलीभिर्नलिनीदलैः प्रतिदिशं दूरीकृतालिव्रजै-
र्लीलाकारतया पुनः पुनरुपायातैः समासेविता।
ईषद्वक्रितकन्धरं प्रकटितप्रेमोत्तरं प्रेयसी
किञ्चिच्चञ्चलचेलकाञ्चलचलन्नेत्राञ्चलं पश्यति॥ ६॥

ततः कलावतीकटाक्षे निपतति सति पुनरकथयत्। सखे
वलयाक्ष! साधूक्तं पुरा प्रियेण कलाधरेण। तथा हि—
तदा खण्डलाशां महीमण्डलाशां
तथा भोगिभोगानुरागं त्यजामः।
मनःक्षोभदक्षान् कृपातः कटाक्षान्
कुरङ्गेक्षणा चेत् क्षणं पातयन्ति॥ ७॥

अपि च—
विमुञ्चति बुधो जनः सुकृतचिन्तनं दूरतो

अहाति च मुनिस्तपस्त्यजति धीततां शङ्करः।
विधिर्भवति चञ्चलस्त्रिजगतीपतिः क्षुभ्यति
क्षणं कुटिलदृष्टयो यदि पतन्ति वामभ्रुवः॥ ८॥

कुवलयाक्षः प्रभो! सत्यमेवैतत्। तदनु माधवः साश्चर्यं कथयति स्म।

कोऽयं निपतितस्तस्याः कटाक्षविशिखो मयि।
कलेवरमभित्वा यत् परं मर्मैव कृन्तति॥ ९॥

फलायते कुचद्वन्द्वमियं हेमलतायते।
अङ्गानि कुसुमायन्ते मनो मे भ्रमरायते॥ १०॥

लतामिमां प्राप्य कुतो गतो मे
हा पङ्कतां मानसषट्पदोऽयम्।
अमुष्य यच्चञ्चलताप्रवादो
विलीयते सोऽपि किमाचरामि॥ ११॥

साऽनमा नवभा रामा माराभा वनमानसा।
याति चारुविभामाभा भामाभाविरुचाऽति या॥ १२॥

एषा नवीना नवहारभूषा
विभूषिता चञ्चलनेत्रकोषा।
कलापकेशा मम दैवदोषा-
दितो गता नेत्रपथात् सुवेशा॥ १३॥

इयं, सखे! कण्ठविलम्बिहारा
नितम्बभाराहितमन्दपादा।
हृदन्तरं नेत्रपथेन गत्वा

मनो गृहीत्वा क्व गता न जाने ॥ १४ ॥

अत्रान्तरे कोऽपि शुकः श्रीमन्तं माधवमनुसृत्य मनुष्य-
वाचा अभिवाद्य विनतः पृच्छति स्म ।

किं नामधेयः क्व कुलेऽवतीर्णः
　स्थित्वाऽथ कं देशमलङ्करोषि ।
ममाद्य जन्मान्तरपुण्यभंशी
　तवागमोऽयं समभूत् कुतो वा ॥ १५ ॥

अथ विस्मिते माधवे कुवलयाश्व उत्तरयति स्म ।

श्रीमाधवाख्यो वसुदेवसूनु-
　र्वृन्दावने किञ्च कृताधिवासः ।
समागतोऽयं मृगयाविधान-
　श्रान्तोऽत्र विश्रान्तिकृते चिराय ॥ १६ ॥

शुकः सविनयं प्रभो ! विमिति दुर्मना इव लक्ष्यसे ।

माधवस्तत् तेऽहं कथयामि यद्यपनयसि ।

शुकः । यदि तत् मत्तोऽपि निष्पद्यते किमितोऽधिकं कर-
णीयमस्तीति विचिन्त्याह प्रभो !

लक्ष्मीः समेतु यदि वा सपदि प्रयातु
　प्राणाः प्रयान्तु किमथापि चिरं वसन्तु ।
क्लेशोऽपि नाम मरणादधिकोऽद्य भूयात्
　त्वामेव हि त्वदुपकारविधौ प्रवृत्तः ॥ १७ ॥

तदाज्ञापयतु प्रभुः सत्वरम् ।

माधवः सविस्मयमुत्तरयति स्म ।

बहवोऽप्युपकारकारिणो
नयनातिथ्यमुपागता मम।
परमित्थमतीव साधुता
तव सा न विलोकिता क्वचित्॥ १८॥

शृणु सम्प्रति मच्चिन्ताबीजम्। अथानेनैव पथा काचिन्मच्चित्तमपहृत्य क्व गतेति कथं प्रतीतः स्वामिति तद्दर्शनोऽनन्यसाधारणं चिह्नमपि कथयामि। तथा हि—

न्यस्तं तन्व्या चरणनलिनं यत्र यत्र प्रदेशे
त्यक्त्वा मल्लीवकुलकलिकायूथिकाजातिकादीन्।
चक्राकारस्थितिमुपगतं तत्र तत्रैव भूयो
गुञ्जन्माद्यन्मधुकरकुलं सादरं बम्भ्रमीति॥१९॥

तदनु शुकः प्रभो! अवश्यं यामीत्युदीर्य्य प्रस्थितस्तेनैव पथा कलावतीसदनं प्रविश्य तच्चेष्टितमालोक्य च श्रीमन्तं माधवमावेदयति स्म। प्रभो! अस्ति तावदुत्कलाधिराजो मुकुन्दसेननामा नृपतिकुलमुकुटमणिस्तस्य तनूजा त्रिभुवनकमनीयमूर्त्तिः कलावतीति विख्याता। सा चेह विद्येश्वरनामानं शिवं पूजयितुं काननमनुप्रविष्टा सम्प्रति पुनः पद्मावतीं नगरीं प्राप्तवती।

माधवः, सम्प्रति किं कुर्व्वती तिष्ठति पप्रच्छ।

शुक उत्तरयति स्म। तदनु तत्रैव केलीसदनसमासीनां कलावतीं प्रति काचित् सखी कथयति स्म।

सहसा हृदये निधाय चेतो

नयनादीन्द्रियमुद्रणां विधाय ।
अयि ! कण्टकिताङ्गयष्टि
सत्यं कथय ध्यायसि किं रहो निषण्णा ॥ २० ॥

कलावती न किमपीत्युत्तरयति स्म । ततः काचित् सखी उपहसति स्म । तथा हि—

नीलाम्बुदश्यामलकोमलाङ्गो
हरन्मनः किञ्चिदपाङ्गभङ्ग्या ।
यः काममे लोचनगोचरोऽभूत्
प्रायेण सोऽस्या हृदयं प्रविष्टः ॥२१॥

इत्युक्ते पुनरीषत्पुलकितां कलावतीतनुं वीक्ष्य परिहसति स्म सस्मितमन्या सखी । तथा हि—

तस्यैव नामग्रहणादिदानीं
तन्वी तनौ यत् तुलकं दधाति ।
मन्ये तदस्याः कमनीयमूर्त्तिः
स एव नूनं हृदि सन्निषण्णः ॥२२॥

ततः कलावत्या नयनकोणे शोणे सति काचित् सखी ।

शोणौ कोणौ सखि ! नयनयोरुद्यतौ गोपनाय
सङ्गामेव स्फुटयतितरां स्वेदविन्दुप्रचारः ।
अन्तःप्रेमाङ्कुरपरिकरारम्भकं कन्दमस्याः
किञ्चित् किञ्चित् कथयति पुनः क्वापि दिव्या मुखश्रीः ॥२३॥

अथ सखीजनैरत्यन्तमुद्वेजिता कलावती उत्तरयति स्म ।

उदेतु तव सर्व्वथा मनसि कापि सम्भावना

सुखेन सखि! साम्प्रतं कुरु ममोपहासं मिथः।
परन्तु वहिरिन्द्रियप्रकरवृत्तिसम्मीलनी
न मां हृदयलम्बिनी त्यजति कापि कादम्बिनी ॥२४॥

तदनु स्मितविकसितमुखी कथयति स्म काचित् सखी। सखि! सौदामिनीं भवतीं कादम्बिनी कथं त्यजतु?

इति मिथो हसन्ति स्म। ततः सहचरीभिः क्रीडमान-केलीकुसुमवाटिकामनुप्रविष्टा कलावती सखीं प्रति निजगदे।

विषवल्लीयते मल्ली विषवल्ली विषायते।
कस्मादकस्मादधुना चन्दनं दहनायते ॥ २५ ॥

किञ्च।

अमी नवतराङ्कुरः पुरत एव तापङ्करः
परम्परभृतागणः श्रुतिविदारि कोलाहलः।
अमी मलयमारुता हृदयतापमातन्वते
विचिन्त्य सखि! सत्वरं कथय सर्व्वमित्थं कुतः? ॥२६॥

अथ पलाशविटपिसन्निधौ गच्छन्तीं काञ्चित् सखीं प्रति सचकितम्।

तेनैव गच्छसि मुहुर्विनिवारितापि
यद्वर्त्मना किमु न पश्यसि तत् पुरस्तात्।
आशोणकोणनखरैरतिदुर्निरीक्ष्यो
दंष्ट्राकरालवदनो मृगनायकोऽसौ ॥ २७ ॥

ततः सखी, अयि महाराजपुत्रि! नायं सिंहः अपि तु पलाशतरुः इत्याकर्ण्य कलावती सत्यं लज्जते स्म। पुनः सभयमूचे।

अद्य मामिह समुद्यताङ्कुशः
पादपः किमिति हन्तुमुद्यतः।
सखि! हा बभूव तव का दशेदृशी
किंशुकेष्वपि यदङ्कुशभ्रमः॥ २८॥

पुनः सचकिता कलावती।

एतदत्र सखि! वेत्सि वा न वा
कस्य वा क्रकचरत्नचणस्थलम्।
सखि! हा! कथं कथय निश्चिता
मतिः केतकीदलकुले तवेदृशी॥ २९॥

पुनरपि कलावती सविस्मयम्।

अस्मिन्नशोकविटपिन्यतिशोककहेतुः
कालः करालविचलद्रसनः किमेतत्।

सखी।

आलोक्य हा! मतिमतीव विरुद्धवर्त्म-
सञ्चारिणीं तव बिभेमि वदामि किंवा॥ ३०॥

अयि प्रभो! तस्याः किमन्यं दशामावेदयामि तथापि किञ्चिदत्यन्तमद्भुतमिति कथयामि। तथा हि—

येषां सेचनमन्तरेण न पुरा पानीयमङ्गीकृतं
प्राणत्यागविधौ मनो विनिहितं वीक्ष्य क्षतं यद्वपुः।
तानेवाद्य नवीनकोरककुलप्रोल्लासिभूमीरुहान्
वारंवारमपारचित्तमनया छेत्तुं समादिश्यते॥ ३१॥

सम्प्रति पुनर्मदुक्तेन विश्विष्य भवन्तमभिज्ञाय ध्यायन्ती तिष्ठति।

इत्येवमाकर्ण्य तं शुकं करे निधाय प्रस्थितो माधवो निजराजधानीं कलावतीमनुध्यायन्।

द्वैताद्वैतमतादिनिर्णयविधिप्रोद्बुद्धबुद्धिश्रुतो
भट्टाचार्य्यशतावधान इति यो गौडोद्भवोऽभूत् कविः।
बाल्ये कौतुकिना तदात्मजचिरञ्जीवेन या निर्मिता
चम्पूर्माधववर्णिकात्र ललितोच्छ्वासो द्वितीयो भवत्॥२॥

इति श्रीचिरञ्जीव-भट्टाचार्यविरचित-माधवचम्पौ द्वितीयोच्छ्वासः।

---

## तृतीयोच्छ्वासः।

अथ पुरा प्रविश्य दौवारिक आवेदयति स्म। कलावतीस्वयंवरोत्सवमावेदयितुमागतं मुकुन्दसेनपुरोहितम्। ततस्तं प्रवेशयितुमादिदेश नेत्रभङ्ग्या प्राप्तप्रभुनिर्देशः कुवलयाचः।

ततः प्रविश्य नृपपुरोहितः प्रणताय माधवाय आशीर्वादं ददाति स्म। तथा हि—

नरेन्द्रमुकुटोत्करप्रचुरनीलरत्नद्युति-
स्फुरन्नखमधुव्रतैः कलितपादपङ्केरुहः।
शतद्युमणिसन्निभस्त्वमिह जीव भूमीतले
समस्तजनपालनाहितमनाः समानां शतम्॥ १ ॥

तदनूपविश्यावेदयति स्म वृत्तान्तमखिलम्। ततो माधवः सह नृपपुरोधसा सत्वरः प्रस्थितः पद्मावतीम्। अत्रान्तरे शुकधरपुष्पकेतुनामानौ परस्परसमाबद्धप्रेमभावौ गगनपथगामिनौ कथयतः स्म। आः! किमेतन्माङ्गल्यवाद्यकोलाहलः श्रूयते तदेहि कौतूहलमालोकयाव इति निष्क्रम्य शुकधरः कथयति स्म। सखे! प्रायेणोत्कलाधिराजतनूजायास्तस्या एव स्वयंवरमहोत्सवो भविता। पुष्पकेतुस्तदनु कथयति स्म सखे! सुमेरुमूर्द्धानमिव सुरनायका हिमालयशिखरमिव मृगनायका उदयभूधराग्रशृङ्गमिव प्रचण्डभानुभानवः स्वयंवरमञ्चं कृतसुभगभूषणविन्यासाधिकरुचिराः क्षितितलपतयः पुरोऽधिरोहन्ति। अथ शुकधरः नवजलधरमिव सौदामिनीं गगनमण्डलमिव सुधाकरकलां सुभगनीलाम्बरविराजितचतुर्दोलमारूढ़ां कलावतीमालोक्य कथयति स्म। सखे!

इयं भुजङ्गिनी श्रितालसदनेकपुष्पान्विता
हिरेफततिसेविता प्रमदखञ्जनालङ्कृता।
फलद्वयभरानता विलम्बितानने: पल्लवै-
र्विलोचनपथं गता भवति कापि हैमी लता॥ २॥
प्रसन्नवदनाम्बुजोल्लसितचारुमन्दस्मिता
हिताचरणतत्परक्षितिपयूथचित्तस्थिता।
विलोचनपथं गता यदियमद्य मानोन्नता
सखे! किल कृतार्थता मम तु तावतैवागता॥ ३॥
दृष्टिः कापि सुरा सुधा स्मितमिदं वक्त्रं कलानां निधि-

वेत्त: कुम्भि श्रवौ दृशौ विजयते धन्वन्तरि: सत्कृपा।
कान्ति: श्रीस्त्रिबलीतरङ्गलहरीनाभीगता वर्त्तता-
मेतस्यामचिरेण भाविकलने लावण्यवारांनिधौ ॥ ४ ॥

एता नवाम्बुधरकान्तिमुदीच्य वेणी-
मेणीदृशो यदि वदन्ति वदन्तु नाम।
भ्रमोऽयं मुखसुधांशुसुधाभिलाषा-
दभ्यागतां भुजगिनीं मणिमुद्वहन्तीम् ॥ ५ ॥

इयं मुखाम्भोरुहसन्निधाने
विलम्बिधम्मिल्लततीच्छलेन।
समागतां सादरमेव बाला
द्विरेफमालामुत वा दधाति ॥ ६ ॥

स्वर्भानुराकलयितुं स समुद्यतोऽभू-
द्राकां विनाननसुधांशुमहो यदस्या:।
मन्ये तदस्य न च तिष्ठति पूर्णिमायां
भावो हि किन्तु परिपूर्णकले सुधांशौ ॥ ७ ॥

उत्थितो निशि कलानिधि-
र्भवेदेतदीयमुखतुल्यताप्तये।
प्रापितो मलिनभावमेतया
लज्जया रभसि यात्यदृश्यताम् ॥ ८ ॥

वदति कोऽपि सुरै: परिपीयते
वदति कोऽप्यपयाति दिवापतिम्।
मम मतेन विधुरेव कलावती-

वदनजातपराभवतः कृशः ॥ ९ ॥

सदा समुपसेवितं सकललोकचित्तालिभि-

र्यदद्भुतकलावतीवदनपुष्करं स्पर्द्धते।

विदन्नपि हृदन्तरे निजरुचिप्रभावोत्करं

कथं भजति न त्रपां कथय हे वलक्षी विधुः ॥ १० ॥

मुखारविन्दोपरिभागसंस्थं

नेवद्वयं खञ्जनमामनन्ति।

प्रफुल्लवक्त्राम्बुजपार्श्ववर्त्ति-

दलद्वयं भृङ्गयुतं मतं मे ॥ ११ ॥

इन्दीवरं लोचनयोस्तुलायै

निर्माय यत्नेन विधिः कदाचित्।

अतुल्यतां वीक्ष्य ततो रजांसि

निक्षिप्य चिक्षेप सपङ्कमध्ये ॥ १२ ॥

केचित् तिलस्य कुसुमं शुकचञ्चुमन्ये

नासां वदन्ति कथयाम्यहमन्यदेव।

संरक्षितो निजशरासनसन्निधाने

कामेन केतकदलैकमयो निषङ्गः ॥ १३ ॥

कामकार्मुकतया कथयन्ति भ्रूलतां मम पुनर्मतमन्यत्।

लोचनाम्बुरुहयोरुपरिस्थं भृङ्गशावकततीद्वयमेतत् ॥ १४ ॥

जम्बीरं वा कमलमुकुलं हेमगुच्छं ययेच्छं

मङ्गल्यं वा कलयतु जनो भूपतेर्मन्मथस्य।

एतद्द्वन्द्वं कलयति मतिर्मामकीना नवीना

केनाप्यस्या हृदि विनिहितं मन्मथानन्दकन्दम् ॥ १५ ॥

अतिबहुतरलज्जा शृङ्खलाबद्धपादो
  मदननृपतिवाहो यौवनोन्मत्तहस्ती ।
प्रकटितकुचकुम्भो लोमराजीकरेण
  पिबति सरसि नाभीमण्डलाख्ये पयांसि ॥ १६ ॥

नाभीबिलान्तरविनिर्गतपन्नगीयं
  संप्रस्थिता नयनखञ्जनभक्षणाय ।
नासामुदीक्ष्य गरुडभ्रममुद्वहन्ती
  गुप्तेव पीनकुचपर्व्वतयोरधस्तात् ॥ १७ ॥

गभीरनाभीह्रदपार्श्ववर्त्तिनी
  विराजते लोमतती मृगीदृशः ।
मुखारविन्दस्य रसाभिलाषिणी
  द्विरेफपङ्क्तिर्वलितेव नीरवा ॥ १८ ॥

अनन्यसाधारणकान्तिकान्त-
  तनोरमुष्याः किमु मध्यदेशः ।
जगत्त्रयी जन्मभृतां निषण्णा
  चिन्तावलीयं त्रिवलीमिषेण ॥ १९ ॥

मध्यात् समानीय सुसारभागं
  वक्षोजमत्यादयिता विधाता ।
अतिप्रयत्नात् त्रिवलीमिषेण
  सोपानवत्मत्रितयं चकार ॥ २० ॥

दृशकैरवबान्धवान्दधानो

जडसंसर्गविमुक्तिसावधानौ ।
चरणौ नलिनेन तोलयन्तः
कथमस्याः कवयो न यान्ति लज्जाम् ॥ २१ ॥

ततः कथयति स्म शुकधरः आस्तां तावदितः परमस्याः स्वयंवरकौतूहलमालोकयावः । इति निष्क्रान्तौ । अथेत्थं वन्दिजनाः क्षितिपतीन् स्तुवन्ति स्म । तथा हि—

किं चित्रं भुवनानि पावयति यद्व्याहितानां यशो-
हंसान्मज्जयति प्रतापदहनं निर्वापयत्याशु यत् ।
आश्चर्यं नृपनायकस्य भवतो यत् कीर्त्तिमन्दाकिनी
तानारोहति भूधरान् जलनिधीमुल्लङ्घ्य गच्छत्यपि ॥२२॥

अर्द्धाङ्गाहितपौत्रकीर्त्तिवनितादीव्यत्सितांशुप्रभं
कैलाशीकृतदिक्करीन्द्रशिरसि न्यस्तस्वपादाम्बुजम् ।
विश्वव्याप्यविनाशिशङ्करपदं पायात् त्वदीयं यशो
न स्यादस्य यदि क्षितीश भवतो दानादिकेभ्यो जनिः ॥२३॥

यश्चन्द्रैरुद्यत्सुकृतनरकल्पद्रुमकरैः
परं लक्ष्मीगर्भैर्द्विरदहयरत्नादिफलदैः ।
निजैर्दानाम्भोभिर्नियततुलितक्षीरजलधि-
श्चिरं जीयाज्जीयाद्द्विधरणि सोऽयं नरपतिः ॥ २४ ॥

देवाकर्णय कौतुकं यदभवत्त्वद्देव यात्रोत्तरं
शत्रूणां सहसा श्रयन्ति हृदयान्याराद् गिरीणां दरीः ।
कम्पन्ते गिरयोऽधुनैव हसति क्षौणी च शम्भोर्गणा
नृत्यन्तो विरमन्ति नृत्यति मुहुर्लक्ष्मीरलक्ष्मीरपि ॥ २५॥

अथवा भारतीनाम्नी प्रतिहाररक्षिका वाङ्गालक्षितिपाल-सन्निधिगतां कलावतीं प्रति निजगदे। अयि महाराजपुत्रि! अस्ति तावत् गङ्गनामा देशः यस्मिन् पारावारसदृशः पद्मावती-प्रभृतयस्तरङ्गिण्यः समुल्लसन्ति। अथ च पावनो ब्रह्मपुत्रनामा महानदो मज्जज्जन्तून् पावयति तस्यायमीश्वरः प्रभूतसेनात्मजो वीरसेनाह्वयः।

आग्नेयास्त्रप्रवीणप्रबलमृगभटाः शत्रुसंक्षोभदक्षा
यस्य प्रौढप्रतापानलबहलशिखास्विन्धनत्वं प्रयान्ति।
सोऽयं प्राचीपयोधिप्रहितकरततीतूर्णसम्पूर्णकोषो
वाङ्गालक्षोणिपालस्त्रिभुवनजनतागीतकीर्त्तिप्ररोहः ॥२६॥

अपिच।

प्रौढाहङ्कृतिशालिनः कुतुकिनो यस्य प्रयाणोत्सवे
ढक्कादुन्दुभिनादनादिकततौ सोल्लासकोलाहलैः।
दिक्चक्रे परिपूरिते सचकितं सम्भ्रमाः सूकराः
शार्दूला महिषा दिशासु सहसा धावन्ति सर्व्वास्वपि ॥२७॥

नवो नवाम्भोधरतुल्यगात्रः सरोजपत्राधिकशोभिनेत्रः।
अये! तड़िद्गौरितवानुरूपो वरोऽयमर्जस्खलवंशजन्मा ॥ २८

तदनु कलावती नेत्रभङ्ग्यैवोत्तरं ददाति स्म।

अथ गौड़राजमुपस्थितां कलावतीं प्रति वाग्भारती सादरं कथयति स्म। आर्य्ये! अस्ति तावत् गौड़नामा देशः। तत्र विविधविद्याचातुरीपरम्पराभूतपुरुहूतपुरोहिताः सकलधर्म्मा-चारधाराचरणचातुरीतिरस्कृतवशिष्ठादिशिष्टधुरन्धराः प्रायः

सर्व्वेऽपि नागराः । तस्यायमम्बष्ठकुलकुलीनः प्रतापदहनदाहिताहितान्तःपुरः सकलभुवनजनैर्गीयमानयशा आजिविराजमानो मानोन्नतसमुन्नतभुजदण्डखण्डितारातिमण्डलीपरिवारनयनाश्रुपूरपरिपूरितदिगन्तरः श्रीमान् माधवसिंहाख्यो नरपतिस्तस्यायमात्मजः श्रीकृष्णचन्द्राख्यः ।

अधिकोन्नतबाहुरेष धीरः कृशमध्यः सुमतिर्विशालवक्षाः ।
जलदाधिकशोभिदीर्घकेशः कलधौतद्युतिरुन्नतः सुवेशः ॥२९॥
अलिगर्भमिवाम्बुजं मुखं दशनैरस्य विभाति सर्व्वतः ।
अत एव निजानुरूपतां गतमेतं कुरु चेतसि स्थितम् ॥३०॥
अमुमप्युपयातमादरादधिकोद्दामगुणैरुपासितम् ।
हृदये न दधौ कलावती मधुपं चम्पककोरिका यथा ॥३१॥

ततो मिथिलाधिराजसविधमुपगतां कलावतीं प्रतीति वाचमूचे प्रतिहाररक्षिका ।

असौ विदेहाधिपतिः परेषां समूलसंहारविधेर्विधाता ।
नाम्ना महासेन इति प्रसिद्धो गुणैर्वरीयाननवद्यरूपेषु ॥ ३२ ॥
भूषणैरधिकमुज्ज्वलाकृतिं चन्दनाङ्किततनुं विलासिनम् ।
एनमालि ! विनिधाय चेतसि स्वर्धुनीं नयनगोचरीकुरु ॥३३॥

तत ईषत् स्मितेन दत्तोत्तरां बालां काशीराजसविधमानीय कथयति स्म पुनर्वागभारती । अयि ! महाराजनन्दिनि ! जयति जयति कापि त्रिभुवनमौलिमाणिक्यभूता वाराणसी नाम नगरी ।

धर्म्मवर्त्मपरिरक्षणदक्षाः सादरं परहिताहितचित्ताः ।

यत्र सन्त्यमितधामकसन्तः सर्व्वतन्त्रपरिचिन्तनवन्तः ॥ २४ ॥

अपिच—

ते पुराणपुरुषस्य केवलं
भावनासु विनिविष्टचेतनाः ।
किं भवाब्धिपरपारगामिनः सन्ति
वा न यतयोऽपि योगिनः ॥२५॥

अथ च यत्र—

सुरगणैः सह हैमवतीपति-
र्निवसति स्वयमेव हि सादरम् ।
हरिरपि प्रतिहारविधौ स्थितः
पुरनिवासिनि देशविधौ विधिः ॥ २६ ॥

अथ च यद्गुणानाकर्णैतरवनविनिवासिनो मुनयः प्रतिक्षणमिति प्रार्थयन्ति । तथा हि—

समासाद्य स्वैरं तव पुरपरिष्वङ्गमभितो
दुराचारप्रीता तनुरधिकपूता भवतु मे ।
अये! काशीनाथ क्षणमपि भवद्ध्याननिरता
मनोवृत्तिर्भूयान्न पुनरनुभूयाद्भवरसम् ॥ २७ ॥

कथयन्ति च परस्परम् ।

समालब्धा काशी यदि पुनरुदासीनमनसा
तदा सद्यो दासी भवति जगदाशीषपदवी ।
जनः कश्चिन्मायी तदभिमुखयायी यदि तदा
पुरज्वालादायी किमुत फणिशायी भवति वा ॥२८॥

सखि! किमधिकं कथयामि विलोकयतामपि मोक्षदायिनी किमुत विमुक्तासूनाम्। निवसतां सतां पुनर्विविधभोगदायिनी चेति या वैकुण्ठकैलाशतोऽप्यधिका। अथ च

विलासिनीनां स्तनमण्डलस्थ-
कस्तूरिकाक्षालनतः समन्तात्।
भागीरथी यत्र नितान्तशुक्ला
पयोधिसंसर्गिजलेव भाति॥ ३९॥

क्वचित् तु—

कस्तूरिका कुङ्कुमचर्चितानां
विलासिनीनामवगाहकाले।
स्वर्वाहिनी यत्र कलिन्दकन्या
सरस्वती संवलितेव भाति॥ ४०॥

तस्याः पतिः कान्तिवपुर्युवासौ
संग्रामसंहारितवैरिवीरः।
दिगन्तविश्रान्तयशा विलासी
कुमारनामा नृपराजसूनुः॥ ४१॥

तदनु कलावती किञ्चित् तमालोक्य तां प्रति कथयामास नमः शङ्कर्य्यै इत्यवगतभावा वाग्भारती अन्यतो नीत्वा निजगदे। आर्य्ये!

नेपालभूपालकुलावतंसो
गोपालनामा दलितारियूथः।
श्रीमानयं नीतिविनीतलोको

लोकोत्तरश्रीरतिधीरकर्म्मा ॥ ४२ ॥

किञ्च—

सुराङ्गनापन्नगकिन्नराङ्गना-
दिगङ्गनागीतगुणो मह्होन्नतः ।
मुखश्रिया निर्जितचन्द्रमण्डलो
विलम्बिहाराधिकशोभितो युवा ॥ ४३ ॥

अनेन यूनाधिककान्तिभाजा
समं भवत्यामिह सङ्गतायाम् ।
भवेत् सदानन्दभरो जनानां
सुधाकरेणेव चिरं निशायाम् ॥ ४४ ॥

ततः कलावती किञ्चिदाधूतमौलि कथयति स्म भवतु तावदन्यतोऽप्यालोकयामि। अथ दक्षिणेश्वरं गतवतीं तामूचे वाग्भारती ।

असौ युवा दक्षिणदेशनाथः
श्रीरङ्गनाथो जितवैरिवीरः ।
धर्म्मेषु वेदेषु कृतानुराग-
तमालमालाधिकशोभिगात्रः ॥ ४५ ॥

संसेवते सादरमेनमालि !
वाग्देवता वन्दिजनाश्रितापि ।
अमुं प्रभुं प्राप्य पयोधिकन्या
सा चञ्चला निश्चलतामवाप ॥ ४६ ॥

तदनु ततो निवर्त्त्य काश्मीरराजमुपगतां कलावतीं प्रति निजगदे सा।

यस्य प्रयाणे समरोत्सुकस्य
तुरङ्गमोद्भूतरजोभरेण।
सास्रूणि विद्वेषिविलासिनीनां
भवन्ति नेत्राण्यतिपङ्किलानि ॥ ४७ ॥

सोऽयं नृपः कुङ्कुमचर्चिताङ्गः
काश्मीरनाथोऽङ्गदशोभिबाहुः।
अनर्घ्यमूर्णावसनं दधानो
लसच्चलत्कुण्डलशोभिगण्डः ॥ ४८ ॥

शुभ्रांशुशुभ्रांशुविसारिकीर्त्तिर्विशालवक्षा नवहेममूर्त्तिः।
तवानुरूपोऽयमुदाररूपो मामल्लदेवो बलदेवस्तनुः ॥ ४९ ॥

ततः कलावती साकूतमग्रे नयने चिपति स्म। ततः श्रीमन्माधवमुपस्थितामधोमुखीमीषत्खिन्नशरीरयष्टिं किञ्चिद् वक्रदृगन्तेन तमालोकयन्तीं कलावतीं प्रति वाग्भारती सानन्दमवदत्। सखि! अमुष्य वंशवर्णनं निरर्थकम्। तथा हि—

रविरिव वर्णनकाले वन्दनकाले पुनः कपालीव।
न जनः स्वतः प्रकाशो भवति वंशवर्णनापेक्षः ॥ ५० ॥

किञ्च

एतस्योन्नतसर्व्वकर्म्मकृतिनस्त्रैलोक्यचूडामणेः
शम्भुब्रह्मपुरन्दरप्रभृतयः स्तुत्यै न शक्ता यदि।
देवः पन्नगनायको भगवती वाणी स्वयं चेज्जड़ा

सौन्दर्य्यस्य निरूपणे वद कथं शक्तो भवेन्मानवः ॥ ५१ ॥

ततः कलावती वाग्भारतीहस्तेन माङ्गल्यमालां श्रीमन्माधवकण्ठावलम्बिनीमकरोत् । तदनु—

मालां बालामिव हृदि गतां वीक्ष्य तूर्णं मुरारे-
र्भूप्रश्रेणी नमितवदना व्रानतामागतेव ।
स्वैरं स्वैरं शशधरकलां व्योममूर्द्धाधिरूढ़ा-
मुद्दामश्रीर्द्रुततरमहो पङ्कजानां वनीव ॥ ५२ ॥

तदनु सर्व्वे बन्धुवर्गाः सोल्लासकन्याकुमारौ पाणिग्रहाय गृहं प्रति नयन्ति स्म ।

द्वैताद्वैतमतादिनिर्णयविधिप्रोद्बुद्धबुद्धिश्रुतौ
भट्टाचार्य्यशतावधान इति यो गौड़ोद्भवोऽभूत् कविः ।
वाक्ये कौतुकिना तदात्मजचिरञ्जीवेन या निर्म्मिता
चम्पूर्माधववर्णिकात्र ललितोच्छ्वासस्तृतीयो गतः ॥३॥

इति श्रीचिरञ्जीव-भट्टाचार्य्यकृत-माधवचम्पौ तृतीयोच्छ्वासः ।

---

## चतुर्थोच्छ्वासः ।

अथ विधिवत् परिणीय वनितां निजराजधानीं प्रति नयन्तं काननान्तरे शिविरमध्यमध्यासीनं श्रीमन्तं माधवं प्रति कथयन्ति स्म मन्त्रिणः । प्रभो ! अस्माकं तावत् ।

अधिकदारुणकर्म्मणि सादरा
न निवसन्ति कतीह निशाचराः।
इति चिरं वसतिर्विपिनान्तरे
बहुविषादकरी हृदयान्तरे॥ १॥

अत्रान्तरे रक्षोदूतोऽवरोधयतो दौवारिकान् प्रति साटोपं निजगदे।

रे रे! क्षुद्रस्वभावाः! प्रकृतिहृतधियः प्राणिरङ्काः समन्तात्
किं वः प्राणानुकम्पा हृदयमनुसमुज्जृम्भते नैव नैव।
त्रैलोक्यक्षोभदीव्यद्रजनिचरपतेश्चौरसंहारहेतो-
र्दौत्येनाभ्यागतस्य प्रबलभुजयुजो यत् कृतो मेऽवरोधः॥ २॥

तदनु प्रविश्य दौवारिक आवेदयति स्म। देव! कश्चिद-खर्वगर्व्वशाली रक्षोहतोऽस्माभिः कथमपि विनिवारितो द्वार-मध्यमध्यास्ते। ततो बलभद्रनिदेशात् दौवारिकैः प्रवेशितो रक्षोदूतः कथयति स्म श्रीमन्माधवमनु।

कन्या कापि मुकुन्दसेननृपतेर्याता जगन्मोहिनी
आकर्ण्यैव मुहुः सुधीरमनसा चित्तान्तरे रक्षिता।
अज्ञात्वैव विशेषमित्थमधुना सेयं त्वयोद्वाहिता
श्रुत्वेति प्रणयेन राक्षसपतिर्बालामिमां याचते॥ ३॥

अथ बलदेवस्तूर्णं घूर्णयन्नयनमवदत्। रे रे! मूढ़! कस्य यमपुरप्रयाणोत्सुकस्य दूतोऽसि यदेवं प्रलपसि।

दूतः। किं भोः न जानाति भवान्। तथा हि—

आसीत् कोऽपि त्रिभुवनशिरोजाग्रदुग्रप्रभावः

क्रव्यादानामधिपतिरतिस्वैरकद्रावणस्य।
तस्यैवायं प्रथमदुहितुः प्राणवत्प्रीतिपात्रं
पुत्रो रक्षःकुलपतिकरानन्दसन्दोहहेतुः॥ ४॥

ततः सस्मितं निजगदे जगदेकविभुः।

अहो निजप्राक्तनपुरुषाणां
चेत् पौरुषैः पौरुषमेति लोकः।
तदाधिगच्छेत् सकलोऽपि पूजां
को नाम न ब्रह्मकुले प्रसूतः॥ ५॥

तदनु रक्षोदूतः सकोपमुवाच।

प्रचलति सति यस्मिन् कौतुकेनापि भूमौ
भवति सुरसमाजो व्याकुलः सुन्दरीभिः।
दशशतशतरक्षोनायकानामधीशो
भवति न हि गरीयान् स स्वतः किं बलीयान्॥ ६॥

अथ कोपकलितान्तःकरणः कुवलयाक्षो निजगदे। आः किं त्वमस्य श्रीबलदेवस्यापि पुरतो न्यस्य बलं वर्णयसि। तथा हि—

एतस्मिन् मुशलायुधे रणभुवो मूर्द्धानमारोहति
प्रोद्यद्भास्वरमण्डलो दिममणिः खद्योतपोतायते।
शक्रः पृष्ठगकातरेक्षणगणैरस्यास्यमालोकयन्
धावन् मूर्च्छति सङ्गरात् तव पतिः कोऽयं पतङ्गाकृतिः॥७॥

ततो रक्षोदूतः सस्मितमूचे। आस्तां तावदिदं स्वस्वप्रशस्तिप्रकाशिकां कथां कथयितुं कः कः शक्तिं न वहति। तथापि युष्माकं किञ्चिच्चित्रं कथयामि।

प्राणेष्वस्ति यदि स्पृहा तदुपते! स्वीयैस्तदा बन्धुभि-
र्निःशङ्कं प्रणिपत्य तावदधुना बालामिमामर्पय।
यावच्छत्रुसमूहघातनविधावत्यन्तमव्याहता-
मादायैव गदाङ्करेण यदसौ नायाति रक्षःपतिः ॥ ८ ॥

ततः क्रुद्धो बलभद्रस्तं वहिः कर्त्तुं निदेशवाहानादिदेश।
अथ धृष्टो दूतः।

अस्माकं त्ववधीरणा यदि कृता किं यातमेतावता
को वा कोणगतः प्रकाशयति न स्वीयं प्रभुत्वं जनः।
किन्त्वेकं रणभूमिमागतवति क्रुद्धे निशाचारिणा-
मीशे वः सकलं भविष्यति बलं व्यक्तं फलञ्चाखिलम् ॥९॥

अथ कोपान्वितो भुवनभीषणः स्वानुजं व्यालदशनमादिदेश मानवभटान्निहत्य तामानयितुम्। अथ गाढान्धकारसमाकारधाराधरपरम्परामिव सौदामिनीसहस्रीमिव विलसज्जिह्वाततीमुद्वहन्तीं विशिखधाराधोरणीं वर्षन्तीं सविभ्रमुपगतां रजनीचरचमूमालोक्य बलभद्रः।

प्रोद्दामैर्वीरनादैः सविभ्रमुपगतांस्त्रासयद्राक्षसेन्द्रान्
सप्तद्वीपप्रमाणां जलनिधिसहितां कम्पयंस्तूर्णमुर्वीम्।
कोपोवेगात् समन्तात् स्फुरदुरुमुशलं पाणिमध्ये निधाय
प्रोत्साही युद्धकाङ्क्षी रजनिचरचमूसम्मुखे निःपपात ॥१०॥

तदनु।

प्रायः सर्व्वेऽपि तूर्णं भुजगपतिपुरं त्रासभाजः प्रविष्टा-
स्तत्रक्षा शस्त्रास्त्रमुच्चैः सचकितमपरे प्राप्तवन्तो दिगन्तम्।

केचित् पादाभिघातान् मुशलनिहतितः केऽपि मुष्टिप्रहारै-
र्मुक्तप्राणा लुठन्तो रणभुवि रजनीचारिवीरा बभूवुः ॥११॥

एतदालोक्य कुपितो व्यालदंशनः ।

विपक्षघाताहितपक्षपातां
चिक्षेप रक्षःपतिरुग्रशक्तिम् ।
दृष्ट्वा पुनस्तां गगने स्फुरन्तीं
हलायुधो निष्फलतामनैषीत् ॥ १२ ॥

अथो यातुधानेश्वरस्यातिरोषाद्
गदाघातमासाद्य शेषावतारः ।
कृषा वीरनादं विधायैव तूर्णं
हलाग्रेण तं प्रापयामास मृत्युम् ॥ १३ ॥

अथैव मनुजस्य यमपुरप्रयाणवार्त्तामधिगत्य कोपकुल-कलितान्तःकरणः स्खलच्चिकुरश्चलदधरपुटः करकलितकृपाणीं मुहुर्नर्त्तयन् गृहद्वारमध्यादुपेत्य रथमारोहति स्म राक्षसाधि-राजः । किञ्चानेन सन्दष्टौष्ठपुटाः स्वस्वायुधं नर्त्तयन्तः प्रलय-कालोदितधरा इव गर्जन्तः कोटिशो यातुधानाः समं प्रच-लन्ति स्म अत्रान्तरे विमानमध्यमध्यासीनाः सुरनायकाः कौतूहलमालोकितुं समुपस्थिताः । तत्र कश्चिद्वैमानिकः पप्रच्छ कञ्चिदभिन्नं सखे ! कथय कस्य वा

अनेकमणिकान्तिभिर्द्युमणिकोटिविम्बद्युभिः
शिलीमुखमुखायुधैरधिकयातशोभोदयः ।
समेति पवनः पुरः पवनवत्समहानुन्नतः

पतत्त्रिपतिचित्रितध्वजविचित्रितोऽयं रथः ॥ १४ ॥

ापर उत्तरयति स्म।

न पश्यसि ? किमग्रतो यदुपतिः स्वयं संस्थितो
रथोपरि गदाधनुर्विशिखशङ्खचक्रायुधः।
अनर्घ्यमुकुटद्युतिप्रकरदुर्निरीक्षाननो
निशाचरचमूचयप्रहितशोणकोणेक्षणः ॥१५॥

तस्तावत् पूर्व्वतः।

कृतान्तरसनोपमां भुजगराजपत्नीसमां
स्वपाणितलसंपुटे परिलसत्कृपाणीलताम्।
रुषारुणदृशा मुहुर्मुहुरुदीक्षमाणो रणे
रथेन समुपस्थितो भुवनभीषणो दृश्यताम् ॥ १६ ॥

थ महीतलादुत्थितं धूलीपटलमालोक्य।

विहायसि वसुन्धरा किमियमेति नेति ध्रुवं
चमूभरवशादधोगमनमेव सम्भावितम्।
नवापि जलदावली क्वचिदुपैति भूमीतलात्
किमेतदिति देवतावलिरभूदतिव्याकुला ॥ १७ ॥

श्चित् पुनर्गगनविनिवासी।

प्रायोऽनीकभरैरभुग्नशिरसोऽप्याशीविषाधीशितुः
प्रच्छायामानिलघूर्णिता वसुमती व्योमेदमारोहति।
किं वा योधपरम्परा समुदितक्रोधानलादुत्थितो
धूमोऽयं करिकर्णतालपवनोद्धूतो वियद्गाहते ॥ १८ ॥

त्यतर्कयत् कश्चिदपरः पुनः।

सेनाभ्रामिह वाजिनां खुरपुटाघातैर्मुहुः प्रार्थिता
तन्मत्तद्विपकर्णतालनिवहैरालभ्य यात्रोत्सवम् ।
कर्त्तुं कर्म्म विवेकहेतुकतया युद्धाध्वरे भास्करं
धूलीधोरणिरुन्नतेयमधिकं व्योमान्तरे धावति ॥ १९ ॥

इति कृतपरिशीलनमतर्कयत् ।

आदावेव गजेन्द्रमौलिविलसद्दण्डापताकावली
पश्चाद्वारणराजधोरणिरतिप्रोद्दामयोधाश्रिता ।
उद्दण्डप्रभुजलाञ्छितापथ घनीभूता रथानां ततो
तत्पश्चात् तुरगावली विजयते योधैः समं सर्व्वतः ॥२०॥

विलोक्यत इहोन्नता प्रतिदिशं पताकावली
मुहुर्यदवकम्पते गगनमौलिमालम्बिता ।
अवैमि तदुपाश्रितान् वियदुपेतवृन्दारकान्
अथोद्धतरजोभरानपनयत्यसौ सर्व्वतः ॥ २१ ॥

योधैरेव वशीकृताः कथमपि प्रोद्दामरोषान्विता
गाढध्वान्तधराधरा इव रणक्षौणीं समालम्बिताः ।
ईषन्मीलितघूर्णितं प्रतिदिशं प्रक्षिप्तनेत्राणवो
मन्दान्दोलितमौलयो मदजलैराभान्ति दन्तावलाः ॥२२॥

इयं रथपरम्परा गगनमौलिचुम्बिध्वजै-
रतीवसुषमावती कणकचूड़या भास्वती ।
हयैरधिकमुच्छ्रितैर्विविधभूषणाभूषितै-
रणाङ्गनमितस्ततः पवनवेगिनी गाहते ॥ २३ ॥

आरूढक्षितिपालभालविगलत्खेदाम्बुसेकोद्धता

भेरीभाङ्कृतिचापटङ्कृतिचमत्कारोल्लसन्मानसाः।
क्षुभ्यत्क्षोणितलं स्फुरत्खुरपुटं चञ्चलत्केशरं
मन्दभ्रान्तविलोचनं प्रतिदिशं नृत्यन्ति वाजिव्रजाः॥ २४॥
करवालकरालमूर्त्तयो विशिखैः केचन भीममूर्त्तयः।
विचरन्ति मुदा पदातयः समरप्राङ्गनमुद्धृतायुधाः॥ २५॥

इति सेनानिवेशकौतूहलं वैमानिका वर्णयन्ति स्म।

केचिद्गदाः केऽपि सचापबाणा-
नन्ये कृपाणीमपरे च शूलम्।
शक्त्यष्टिमन्ये मुशलं परे च
प्रोत्तानहस्ताः परिनर्त्तयन्तः॥ २६॥

झञ्झानिलानीतपयोधराभा
नक्तंचरा रङ्गभुवं समेताः।
तेषु स्फुरन्त्यचललोलजिह्वा
भजन्ति विद्युच्छतकान्तिमुच्चैः॥ २७॥

युग्मकम्।

अथ निशाचरसैनिकेषु।

दन्तप्रहारैश्च करप्रहारैः
क्रव्याद्वीरान् विनिपातयन्तः।
मत्तद्विपा रोषभरान्धचित्ताः
सेनाटवीं व्याकुलतां नयन्ति॥ २८॥

ारोषयुद्धाङ्गनमध्यधावन्मत्तद्विपानामधिकोत्सुकानाम्।
ादाभिघाताभिहताः पतन्ति रथाश्च योधाश्च तुरङ्गमाश्च॥२९॥

रम्भातरूनुद्धतवातपूरा यथा तथा वारणयूथनाथाः।
संग्रामभूमौ विनिपातयन्ति रथांश्च योधांश्च तुरङ्गमांश्च ॥२

अर्द्धेन्दुतुल्यैः फलिभिः शिरांसि
वीराः शरीराद्रजनीचराणाम्।
भूमीरुहाणां शिरसः फलानि
झञ्झानिलौघा इव पातयन्ति ॥ २१ ॥

कशाभिघातादतिरोषभाजः
प्रकीर्णनक्तंचरसैनिकेषु।
हरेर्भटानां हरयः पुरस्तात्
यवेन तूर्णं हरिवत् पतन्ति। २२ ॥

रणाङ्गनेषूद्भटयातुधानान्
पादान्तकृत्तानथ मध्यकृत्तान्।
चञ्चत्कृपाणीलतिकाभिराभि-
स्तानश्ववारा विनिपातयन्ति ॥ २३ ॥

निशाचरेन्द्रैः कवलीकृतार्द्ध-
कलेवराः केचन वीरधीराः।
हस्ताग्रसंस्थैरसिभिर्विदार्य्य
वक्त्राणि तानेव निपातयन्ति ॥ २४ ॥

केचिद्भटाश्चोद्भटयातुधानै-
र्धृत्वा कराभ्यां कवलीकृताङ्गाः।
विदार्य्य तेषां जठराणि खड्गै-
रुत्प्लुत्य युद्धाङ्गनमाप्नुवन्ति ॥ २५ ॥

यच।

रथांश्च योधांश्च तुरङ्गमांश्च
निक्षिप्य वक्त्रेषु मतङ्गजांश्च।
दंष्ट्राभिरुग्राभिरतीवरोषा-
न्निशाचराः केचन चर्व्वयन्ति ॥ ३६ ॥

वीरान् परान् केचन यातुधानाः
करप्रहारेण निपातयन्ति।
अन्यान् भटानन्यनिशाचरेन्द्रा
व्योमान्तरे कन्दुकवत् क्षिपन्ति ॥ ३७ ॥

केचिन्मदोन्मत्तगजेन्द्ररूप-
धरा निशाचारिकुलावतंसाः।
संग्रामभूमौ नरवीरसेना-
मेनामतीवाकुलतां नयन्ति ॥ ३८ ॥

केचिद् गृहीत्वा महिषस्य रूप-
मुद्ग्रीवमाशासु विलोचनानि।
क्षिपन्ति धावन्ति विदारयन्ति
वीरान् विषाणैर्गगनं स्पृशद्भिः ॥ ३९ ॥

मृगेन्द्ररूपेण च केऽपि रक्षः-
कुलावतंसाः प्रखरैर्नखाग्रैः।
विदारयन्तो नरवीरसेना-
मतङ्गजानाकुलतां नयन्ति ॥ ४० ॥

। समरभूमिकौतूहलं प्रदर्शयन्ति स्म वैकानिकाः।

अथ समरमूर्द्धनि बलभद्रे क्रीडति सति

अवापुरतिमूर्च्छनं समरमूर्द्धि केचित् पुन-
र्लुठन्ति पतिता भुवि श्वसन् जीविनः केचन ।
कृतान्तनगरे परे पलभुजः पुरः प्रस्थिताः
परैः पुनरुपोषितं ननु दिगन्तमन्तर्भिया ॥४१॥

अथ रथेनागतो भुवनभीषणः कथयति स्म साटोपम् ।

रे रे ! चेतसि मानवाः कथमपि त्रासं वृथा मा कृथा
युष्मासु प्रहिणोति शस्त्रमधिकक्रुद्धोऽपि नायं जनः ।
विश्रामं कुरु रौहिणेय भुवनप्रख्यातवीर्य्योत्करे
हेलाभिन्नचितकंसकालियमहावीरेऽस्मि बद्धस्पृहः ॥४२॥

पुरो गरुड़ध्वजं वीक्ष्य तं प्रति ।

कंसारातिरिति त्वमेव भुवने सर्व्वैर्जनैर्गीयसे
बाल्ये कौतुकिना त्वया मुररिपो ! गोवर्द्धनोऽप्युद्धृतः ।
अन्यत्वच्चरितप्ररोहकथने शक्तो न कश्चिज्जनः ।
पुण्यैरेव तदद्य लोचनपथं यातोऽसि नः सर्व्वथा ॥४३।

इत्युक्ते अस्मिन् कथयति स्म तत्सारथिः प्रभो ! अमुना मुरहरेण संग्रामविधौ किमिति न रचयसि मायया चयेन निर्जितः स्यात् ।

अथोत्तरयति स्म राक्षसेन्द्रः किमीदृशमपि वीरं पुरुषमालभ्य मायायुद्धं कर्त्तव्यमस्माभिः ।

इत्युदीर्य्य धनुषि विशिखमारोप्य कर्णान्तमाकृष्य तत्त्वाण माधवं लक्षीकृत्य ।

अथ—

मुमोच युगपद्वीरो मुरारिर्विशिखद्वयम् ।
चिच्छेदैकः शरं तस्य पताकामपरः पुनः ॥ ४४ ॥
ततो मुमोच युगपद्बाणद्शकं राक्षसेश्वरः ।
चतुर्भिश्चतुरो वाहान् षड्भिर्विव्याध माधवम् ॥४५॥
अथ यं फलिनं श्रीमांस्तत्याज मधुसूदनः ।
तस्योरः प्राप्य सप्राणैर्निश्चक्राम कलेवरात् ॥ ४६ ॥

अथ भुवनभीषणप्रियतमा चम्पककोरिका निष्क्रम्यान्तःपुरान्निजप्राणनाथं रणभुवि शयानमालोक्य विलपति स्म सवाष्पगद्गदम् ।

अयि जीवन ! जीवनाधुना द्रुतमुत्तिष्ठ महीतलादितः ।
किमु भूशयने दुनोति नो तनुरेषा मृदुले सदा स्थिता ॥४७॥

या पुरा मलयजातचर्चिता
पद्मकेतकरजोभिरर्चिता ।
सापि हन्त तव धूलिधूसरा
साम्प्रतं लुठति भूतले तनुः ॥ ४८ ॥

अप्सरोभिरथ किन्नरीगणैः
प्रार्थिता तव पुरा हि या तनुः ।
सापि संप्रति विधेर्विधानतो
गृध्रवायसशिवाभिरिष्यते ॥ ४९ ॥

अयि जीवित ! पामरो परो
भवता कोऽपि समो न वीक्ष्यते ।

यदुपेक्ष्य भवान् स्थितो गतं
दिवमेकाकितया निजेश्वरम्॥ ५०॥

ततो धैर्य्यमवलम्ब्य माधवं प्रणमन्तीं चम्पककोरिकामालोक्य कुवलयाक्षः कथयति स्म।

इयमियं प्रियशोकसमाकुला
भुवनभीषणजीवनवल्लभा।
यदुपते! त्वयि चम्पककोरिका
वितनुते प्रणतिं नतमौलिना॥ ५१॥

द्वैताद्वैतमतादिनिर्णयविधिप्रोद्बुद्धबुद्धिस्सुतो
भट्टाचार्य्यशतावधान इति यो गौडद्भवोऽभूत् कविः।
बाल्ये कौतुकिना तदात्मजचिरञ्जीवेन या निर्म्मिता
चम्पूर्माधववर्णिकात्र समभूत् तुर्य्योऽयमुच्छ्वासकः॥४॥

इति श्रीचिरञ्जीवभट्टाचार्य्य-कृतमाधवचम्पू-चतुर्थोच्छ्वासः।

## पञ्चमोच्छ्वासः।

अथ शयनमन्दिरसन्निधौ वन्दिजनाः प्रातर्वर्णयन्ति स्म।
तथा हि—

नभसि विरलतारा मौक्तिकानीव भान्ति
स्फुटतरमयमस्ताद्याधरं चुम्बतीन्दुः।

रविरुदयधरित्रीधारिमूर्द्धानमेतुम्
हृदयमनु नितान्तोल्लासमङ्गीकरोति ॥ १ ॥

किञ्च—

करनखरविदीर्णध्वान्तकुम्भीन्द्रकुम्भात्
तुहिनकणमिषेण क्षिप्तमुक्ताप्ररोहः।
अयमुदयधरित्रीधारिमूर्द्धाधिरूढ़ो
नयनपथमुपेतो भानुमत्केशरीन्द्रः ॥ २ ॥

अपि च—

चन्द्रकान्तगलदम्बुनाधुना
या चकोरनयने समाश्रिते।
कोकलोकहृदयानलः पुनः
सूर्य्यकान्तमणिमाश्रयत्यहो ॥ ३ ॥

ततो निजराजधानीमागतः कथमपि कल्पसहस्रवच्चतुर्थयामं निनाय। अथ कुवलाक्षः सविकाशम् कथयति स्म।

कोकानाकुलयंश्चकोरतरुणीवैकल्यमुन्मूलयन्
अम्भोजानि निमीलयन् कुमुदिनीरुन्मीलयन् सर्व्वतः।
पान्थानाकुलतां नयन् कुलबधूचेतः समुल्लासयन्
अस्तं याति दिवापतिः समुदयं यात्येष दोषापतिः॥४॥

अस्तोदयाचलविलम्बिरवीन्दुबिम्ब-
व्याजात् क्षणं श्रवणं श्रवणयोर्निहितारविन्दा।
ताराच्छलेन कुसुमानि समुत्क्षिपन्ती
सन्ध्येयमागतवती प्रमदेव काचित् ॥ ५ ॥

व्योमपात्रमपि चैकपाणिना विस्फुटोडुकुसुमानि बिभ्रती।
अन्यपाणिकलितेन्दुदर्पणा कामिनीव रजनीयमागता॥ ६॥

तदनुप्रविष्टे शयनीयमन्दिरं माधवे कथमपि कलावती।

परिजनवनिताभिर्बोधिता सा चिरेण
रचितसुभगवेशा ताभिरेव प्रकामम्।
नमितवदनपद्मा लज्जमाना समन्तात्
पतिसविधमुपैतुं प्रस्थिता मन्दमन्दम्॥ ७॥

केलिवेशविनिवेशनोद्यमे सज्जयोर्विधिनिषेधहेतवे।
द्वन्द्वसङ्गरमनङ्गलज्जयोर्द्वारभित्तिमवलम्बितेक्षते॥ ८॥

तज्जयात्तदनु पुष्पधन्वना केलिमन्दिरमियं प्रवेशिता।
सन्निवेश्य दयितं हृदन्तरे तत्क्षणात् सपदि नूतना वधूः॥ ९॥

ततः—

मन्दमाकलितकङ्कणक्वणं चञ्चलेन वसनाञ्चलेन सा।
तत्र दीपकलिका भ्रमान्मुहुर्स्वेष्टते मणिशिखाविलोपने॥ १०॥
दरकण्टकिताङ्गमागता विमुखीभूय ततः कृशोदरी।
स्वपिति स्म निमीलितेक्षणा तनुमाच्छाद्य निजेन वाससा॥११॥

ततः—

सभयं दरचालिताङ्गुली वदनाच्छादनचालनेन सा।
शयिता दयिता मनो मुदा क्षणमुन्मीलितलोचनेक्षते॥ १२॥

अथ निद्राव्याजमपनीय,

मन्दमन्दमपसारितेन स प्रेमधीरणिजडेन पाणिना।
सादरं सभयमल्पकम्पितं प्रेयसीं स्पृशति माधवः पुरा॥ १३॥

अथैवं विविधकेलिकौतूहलैः कियतो वासरान् गमयित्वा नारदवचसा द्वारकां प्रति प्रचलितः।

ततः—

यामीत्युक्ते कथमपि सकृत् प्राणनाथे निशीथे
बाला म्लाना स्रगिव कलिता भानुभिर्भानवीयैः।
आनम्रास्यं करकिसलयन्यस्तताम्बूलगुच्छं
चित्रारूढा कृतिरिव परं भित्तिमालम्ब्य तस्थौ ॥ १४ ॥

ततः कामं प्रति कथयति स्म निशीथे कलावती—

अपराधपरीवादे तनुं दहसि चेदिह।
मनोभव! मनोदाहे लज्जसे न कथं भवान्॥ १५ ॥

वृथा भजसि दीनतां किमनया फलं सिध्यति।
प्रियस्तु भवतीं विना चिरतरं भवेन्न स्थिरः॥ १६ ॥

इत्युक्ते सखीजने उत्तरयति स्म सा—

विवेककुलडाकिनी ननु भवैकवेद्यामिमाम्।
अहो विरहवेदनां सखि! न वेत्सि मौनं भज ॥ १७ ॥

ततो दिनान्तरे दैवादागतं नारदप्रेरितं कपटहंसमालोक्य दूरीकुर्व्वतीं काञ्चित् सखीं प्रति किञ्चिदाधूतमौलि कथयति स्म कलावती—

सखि!

किमिति किमिति दूरादागतं खिन्नमेतं
कमलवनिषण्णं हंस दूरीकरोषि।
मम हृदि परितापं चेत् करोत्येष कुर्य्याद्

घटयति हि विधाता दुःखिनां दुःखहेतून् ॥१८॥

इत्युदीरितमाकर्ण्य सत्वरं कलावती सविधमभ्युपेत्य कथयति स्म हंसः—

कथय मयि समन्तात् कथ्यमेतद्भवेच्चे-
दहमतिपरिखिन्नो वीक्ष्यते खेदमुग्रम् ।
किमिति किमिति कान्ते हन्त ! ते मूर्त्तिरेषा
तुहिनसमयखिद्यत्पद्मिनीवद्विभाति ॥ १९ ॥

इत्याकर्ण्य विस्मिता कलावत्युत्तरयति स्म । अये ! पक्षीन्द्र !

मध्ये सिन्धोर्जयति नगरी काञ्चनी द्वारकाख्या
तस्यामास्ते नवजलधरश्यामला कापि मूर्त्तिः ।
तस्यामेव प्रकृतिसरलं चित्तमेतन्निमग्नं
तस्या एव प्रबलविरहज्वालयाऽभूद्व्ययम् ॥ २० ॥

इत्याकर्ण्य भवतु तावत् तत् तवाहमपनयामि दुःखमित्युदीर्य्य प्रचलितं हंसं क्षणमपवार्य्य कथयति स्म कलावती—

हस्तो न्यस्तस्तव शिरसि न स्थेयमेवेति सत्यं
मासं व्याप्य क्वचिदपि मया प्रेयसीं त्वां विहाय ।
एतां किन्न स्मरसि सुमते ! पूर्व्वनिर्बन्धवीथीं
संवादोऽयं विरलसमये माधवे वेदनीयः ॥ २१॥

अपिच—

भूयोभूयः कुसुमधनुषा प्रार्थितेनापि येन
त्यक्त्वैवाहं तव विरहजं वीक्ष्य दैन्यन्दयातः !
अद्य श्वो वा मुरहर ! मम प्रार्थना सम्मतेन

ध्यायन्ती त्वच्चरणनलिने तेन नीये यमेनम् ॥२२॥
चिरशोकपरिम्लाना प्राणानद्य त्यजाम्यहम्।
त्यजन्ति नैव मां प्राणाः पुनस्त्वद्दर्शनाशया ॥ २३ ॥
वियोगदहनज्वालावलीवेष्टितजीवितात्।
यमदूताः पराभूता न स्पृशन्ति कलेवरम् ॥ २४ ॥
इतोऽपि महतीं तत्र यातनामुपसेवते।
इतीव कलयन् कालः कुरुते कालयापनम् ॥ २५ ॥
एतस्या हृदये हन्त! कान्ते! सायुषि तिष्ठति।
कथमेषा समानेया कृतान्तेनेति चिन्त्यते ॥ २६ ॥

इत्यप्यावेदनीयम्। इति तया विसृष्टो हंसः पाथोधिकूले-ऽवतीर्य्य पाथोनिधिं वर्णयति स्म—

पुरः पाथोनाथः सुरमुषितसम्पत्परिकरः
स्वसम्पत्प्राचुर्य्यं कलयितुमिवोद्दामममहिमा।
अधोऽन्वत्प्रोदञ्चद्विपुलतरकल्लोलनिवहै-
र्नतग्रीवोद्ग्रीवः फणिविबुधलक्ष्मीं कलयति ॥ २७ ॥

किं वा—

उदञ्चत्कल्लोलैर्निजतनुजवातव्यवशगः
करोति प्रारम्भं सुरपुरमुपैतुं जलनिधिः।
इदानीमेवास्मिन् जगति मयि धीरे चपलता
परीवादो भावी द्रुतमिति परावृत्तिमयते ॥२८॥

किं वा—

उदञ्चत्कल्लोलैस्त्रिदशपतिमुद्दिश्य विनयी

पुरः स्वीयामेव प्रथयति तनुं निष्क्रयविधौ ।
अधोऽम्बत्कल्लोलैर्भयतरलमाख्वासयितुम्-
त्पपन्नं मैनाकं पुनरयमधो याति जलधिः ॥ २९ ॥

ततः प्रविश्य द्वारकां श्रीमाधवान्तिकमेकान्ते कलावती-
कथितवृत्तान्तं कथयित्वा पुनः कथयामास—प्रभो !

नासाग्रन्यस्तदृष्टेः स्वविषयविकलीभूतवाह्येन्द्रियायाः
किञ्चित् किञ्चिद्दधत्याः पुलकमपि तनौ भित्तिमालम्बितायाः
कालिन्दीकूलकुञ्जे निरवधि भवतश्चेष्टितं यद्यदासी-
दन्तस्तत्तत् स्मरन्त्याः क्षणमिव दिवसा यान्ति तस्याः कदाचित् ॥ ३०

करकमलगतं कदाचिदस्या
दिवसविधूदयमाननं दधत्याः ।
अविरलगलदश्रुलोचनायाः
क्षणमपि कल्पशतादुपैति दैर्घ्यम् ॥ ३१ ॥

कपोले पाण्डुत्वं, किमपि जलधारां नयनयोः,
तनौ कार्श्यं, दैन्यं वचसि, हृदि दावानलशिखाम् ।
अवज्ञां प्राणेषु, प्रकृतिषु विपर्य्यासमधुना
विमन्ये वैराग्यं सकलविषयेष्वाकलयते ॥ ३२ ॥

क्षणं मूर्च्छामेति, भ्रमति परितोऽथ क्षणमपि,
क्षणं प्रैति स्तम्भं, निरवधि भवद्ध्याननिरता ।
क्षणं स्वप्ने बाला तव सुभगयोगञ्च लभते,
क्षणं तेजः शम्भोर्नयनजमथ ध्यायति यमम् ॥ ३३ ॥

सन्ध्यां कोपं तत उपगतां हन्त रात्रिं कृपाणीं

चन्द्रं चक्रं विरहविधुरा तारकापङ्क्तिमुग्राम् ।
तूणीरान्तर्गतशरततीः प्रज्वलत्पुङ्खभागं
सन्नद्धास्त्रं कलयति पुनर्मन्मथं राक्षसेन्द्रम् ॥२४॥
आद्यः कोपस्तदनुमदनस्तद्वियोगस्तृतीयः
शान्त्यै दूतीवचनमपरः पञ्चमः शीतभानुः ।
इत्थं बाला निरवधि परं त्वां फलं प्रार्थयन्ती
हा ! हा ! पञ्चज्वलनमधुना सेवते योगिनीव ॥२५॥

सा कदाचित् सखीं प्रति इत्यकथयत्, तथा हि—

असौ विरहभूरुहः प्रतिदिनं नवं पल्लवं
बिभर्त्ति नयनाम्बुभिः सकलदिक्षु सिक्तो मया ।
अये ! सखि ! निरन्तरं वदनमुद्रयागोपित-
स्तदीयगुणमण्डलीस्मरणधूपसन्धूपितः ॥ २६ ॥
भस्मीभूतः कुसुमविशिखः शम्भुनेत्राग्निनाभू-
ज्ज्वालादायी तदनु मनसि प्राप्तजन्मा बभूव ।
भूयस्तस्मिन् विरहदहनैर्दाहितोऽसौ मयैवं
कुचोत्पन्नो व्यथयति पुनर्मामहो ! तन्न वेद्मि ॥ २७॥

वसन्ते तु,

नयामि परितः क्वचित् सहचरि ! क्षमस्व क्षणं
विकाशितनखावलिर्नवपलाशपुष्पच्छलात् ।
विदारितवियोगिनीहृदयमत्तदन्तावली
यतो मदनकेशरी निखिलकाननं गाहते ॥२८॥

अपिच,

वदन्ति किमु साम्प्रतं पिकमिषादिमाः सर्व्वतो
ममाद्य यमदूतिका यमपुरप्रयाणोत्सवम्।
किमन्यदधिकं पुनर्मलयमारुतो जीवितं
विदार्य्य हृदयान्तरं सखि! गृहीतुमभ्यागतः ॥३९॥

ग्रीष्मे तु,

रात्रिर्मे दिवसायते हिमरुचिश्चण्डांशु लच्चायते
तारापङ्क्तिरपि प्रदीप्तवडवा वह्निस्फुलिङ्गायते।
धीरो दक्षिणमारुतोऽपि दहनज्वालावलीढ़ायते
हा! हा! चन्दनविन्दुरद्य जलवत्सञ्चारिरङ्गायते॥४०॥

वर्षासु पुनः,

मेघा एते गगनमनुतं भानुमन्तं पिधाय
यद्यप्येतैरवनिमसृतैः सर्व्वतः प्लावयन्ति।
मन्दं मन्दं मलयपवनः सेवतेऽसौ तथापि
पापीयस्याः सखि! मम तनौ ताप एवोज्जिहीते॥४१॥

किञ्च,

निपातयति वासवे बलिनिषूदनायाशनिं
स्मृतो रिपुनिषूदनं मम वधाय विद्युच्छलात्।
दधात्यसिलतां करे जलदवारिधारामिषात्
किरत्यविरतं प्रिये! विषमसायकः सायकान्॥४२॥

शरदि पुनः,

एवमेव हि सदानुभूयते
शुद्धसायकमहो! मनोभवः।

मुञ्च मां न सरसीषु गम्यते
तासु केवलविषाक्तसायकाः ॥ ४३ ॥

अम्बरं सखि! स एव वाडवो यामिनीपतिमिषेण गाहते।
एष वा प्रकृतितो हि तादृशः कालकूटवड़वाग्निसोदरः ॥४४॥

प्रभो! किमन्यद्वा ब्रवीमि? तथा हि—

मन्दं मन्दं प्रियपरिजनैर्वीजिता पद्मपत्रै-
र्वारं वारं मुकुलितमुखी चन्दनासिक्तदेहा।
अन्तर्ज्वालां निरवधि वहिः खेदविन्दून् विधत्ते
हेमन्तेऽपि प्रविशति मुहुर्वारिपूरं कृशाङ्गी ॥ ४५ ॥

अथच,

आलीचालितपद्मिनीदलचलत्सव्याङ्गभङ्गीकृता
स्वाङ्गालिङ्गनममर्मरीकृतनवाम्भोजालिशय्या चिरात्।
चैतन्यं कथमप्युपेत्य शनकैरुन्मील्य नेत्राम्बुजं
बाला केवलमेव शून्यहृदया शून्यं जगत् पश्यति॥४६॥

कादाचित् सखीं प्रति कथयत्यपि, तथाच—

उत्तप्तोऽहं तव मुखसुधाशीकरैः शीतलः स्या-
मित्युक्तैव स्मितविकसितेनाननाम्भोरुहेण।
कृत्वाङ्के मामिह हि शयने सन्निषण्णः सदैवा-
दद्य स्वप्ने नवजलधरश्यामलोऽलोकि भूयः ॥ ४७ ॥

इति सकलवृत्तान्तमाकर्ण्य तूर्णमहमागत एवेत्युदीर्य श्रीम-
न्माधवो विससर्ज हंसम्। तदनु—

उन्निद्रव्रतदीक्षितेन तु मया त्यक्ताः समस्ताः क्रिया

लज्जायै परमर्च्चितः प्रतिपदं तोयाञ्जलिर्दूरतः।
व्यामुग्धेन वने वने तत इतो भ्रान्तं मुहुर्यत्कृते
हा! धिक्! सापि कलावती गुणवती दैवेन विस्मारिता॥४८
यामासाद्य पुरा पुराणकृतिनः सत्कीर्त्तिसम्पादिनीं
भूरि प्रेमपरम्परापरिचितिप्रोद्बुद्धचित्तोत्सवैः।
सानन्दं क्षणवद्दिनानि दिनवत् संवत्सरा निर्ययु-
स्त्यक्त्वा तामपि सम्प्रति प्रतिदिनं दैवादिह स्थीयते॥४९॥

इति चिन्तयन्नपि नियतम्।

नो वैकल्यं प्रकटयति नो वैमनस्यं विधत्ते
नैवोच्छ्वासं भजति जड़तां नापि केलीविधाने।
पार्श्वस्थायी मुररिपुरसावन्यसीमन्तिनीना-
मन्तर्ज्वालाकवलिततनुः केवलं कार्श्यमेति॥५०॥

अत्रान्तरे रुक्मिण्याः काचित् सखी कथयति स्म रुक्मिणीं प्रति—

अतीतमभवद्दिनत्रितयमेतदालोकनेन
वीजमुपगम्यते कथमपीत्यतः पृच्छ्यसे।
अतीवमृदुतावती शयनमध्यविस्तारिणी
कुतः कथय मर्मरी भवति तन्वि! पुष्पावली॥५१॥

अपराप्यवदत् सखि! सत्यं सत्यम्।

निधाय करसम्पुटे नवविकाशिपङ्केरुहं
प्रभोर्निकटवर्त्मना सखि! यदा मया निर्गतम्।
तदा दलपरम्परामलिनशीर्णतामागता

गता मधुकरावली गगनमण्डलं व्याकुला ॥५२॥

अन्याप्यकथयत्—

किमप्यमलशीतलं सलिलमर्द्धपानोत्तरं
विहाय विततानन: सलिलमन्यदाकाङ्क्षति।
अमुष्य पतितस्तनौ मलयजन्मन: शीकर:
किमन्यदधिकं पुनर्झटिति शोषमायात्यपि ॥५३॥

इत्थं प्रियस्यान्यसीमन्तिनीविरहव्यथामाशङ्कमानां रुक्मिणीप्रभृतिप्रेयसीं प्रति भारतखण्डे रक्षोभयादिकमुपन्यस्य प्रस्थितो द्वारकातः श्रीमन्मधुसूदनः। अथ क्रमेण मधुपुरसन्निधिमुपगतं माधवं प्रति सारथिर्निजगदे—प्रभो! अद्यैवं श्रीमदागमवार्त्ता किं किं न रचयति पुरेऽस्मिन्। तथा हि—

माङ्गल्यानि लसन्ति दिक्षु परितो वस्तूनि सर्व्वास्वपि
श्रीमद्दर्शनलोलुपास्तत इतो धावन्त्यमी नागराः।
सानन्दं द्विजनायकाः प्रतिदिशं कुर्व्वन्ति वेदध्वनिं
गायन्त्यद्य पुराङ्गनाः प्रतिपदं नृत्यन्ति वाराङ्गनाः ॥५४॥

अथ कलावत्या—

आयाते दयिते चिरेण रभसादालीभिरावेदिते
निर्मुक्ताः सहसाऽनया नयनयोर्यद्वारिधाराः क्षणम्।
तन्मन्ये विरहानले चिरतरं हुत्वाश्रुविन्दूत्करै-
रद्यैवं नयनस्रुचा मृगदृशा पूर्णाहुतिर्दीयते ॥५५॥

वाग्देवीवदनादनादिरचना विन्यासदीव्यन्नव-
द्वीपप्राप्तजनैरनेकदिवसं वाराणसीवासिनः।

विद्यासागरजागरोन्नतमतेर्भाव्यामनैषा कृति-
र्विद्वद्भिः कृपया कयापि सहसा मात्सर्य्यमुत्सृज्य तैः ॥ ५
द्वैताद्वैतमतादिनिर्णयविधिप्रोद्बुद्धबुद्धिस्तुतो
भट्टाचार्य्यशतावधान इति यो गौडोद्भवोऽभूत् कविः।
बाल्ये कौतुकिना तदात्मजचिरञ्जीवेन या निर्मिता
चम्पूर्माधववर्णिकेह समभूदुच्छ्वासकः पञ्चमः॥ ५ ॥

इति श्रीचिरञ्जीव-भट्टाचार्य्य-कृतमाधवचम्पू-पञ्चमोच्छ्वासः।

समाप्तमिदं काव्यम्।

| | | |
|---|---|---|
| २७ | कादम्बरी—सटीक | ४ |
| २८ | राजप्रशस्ति ... | = |
| २९ | अनुमानचिन्तामणि तथा अनुमानदीधिति | ४ |
| ३० | सर्वदर्शनसंग्रह ... | १ |
| ३१ | भामिनीविलास – सटीक ... | १ |
| ३२ | हितोपदेश – सटीक ... | १ |
| ३३ | भाषापरिच्छेद मुक्तावलीसहित ... | १ |
| ३४ | बहुविग्राहवाद ... | । |
| ३५ | दशकुमारचरित – सटीक ... | १॥ |
| ३६ | परिभाषेन्दुशेखर ... | ॥। |
| ३७ | कविकल्पद्रुम (वोपदेवकृत धातुपाठ) ... | ॥ |
| ३८ | चक्रदत्त (वैद्यक) ... | १॥ |
| ३९ | उणादिसूत्र – सटीक ... | २ |
| ४० | मेदिनी कोष ... | १ |
| ४१ | पञ्चतन्त्रम् [श्रीविष्णु-शर्म्म-सङ्कलितम्] ... | २॥ |
| ४२ | विद्वन्मोदतरङ्गिणी (चम्पूकाव्य) ... | ॥ |
| ४३ | माधवचम्पू ... | ।= |
| ४४ | तर्कसंग्रह (इंराजी अनुवाद सहित) ... | ॥ |
| ४५ | प्रसन्नराघवनाटक (श्रीजयदेवकविरचित) | १ |
| ४६ | विवेकचड़ामणि [श्रीमत्शङ्कराचार्य्य विरचित]। | ।= |
| ४७ | काव्यसंग्रह [सम्पूर्ण] ... | ५ |
| ४८ | लिङ्गानुशासन (सटीक) ... | । |
| ४९ | ऋतुसंहार—सटीक ... | ।= |
| ५० | विक्रमोर्वशी—सटीक ... | १॥ |
| ५१ | वसन्ततिलकभाण ... | ॥— |
| ५२ | गायत्री [वङ्गाक्षरैः] ... | |
| ५३ | सांख्यदर्शन (भाष्यसहित) सांख्यप्रवचनभाष्य | २ |

